जीवनेनाप्युपपत्तेः । नन्वेवं भेदाभेदयोरसंभवे ऽप्यात्मनि तौ स्यातामिति चेद् न । तत्र भेदासिद्धेः । विवादगोचरापन्नाः स्थावरजङ्गमशरीरव्यक्तयः प्रतिवादिशरीरव्यक्त्यात्मनैवात्मवत्यः शरीरव्यक्तित्वात् प्रतिवादिशरीरव्यक्तिवदित्येकत्वानुमानात् । अथात्मानो भिन्नाः युगपज्जननमरणादिविरुद्धधर्माश्रयत्वादग्न्युदकादिवदिति चेद् न । जननादीनां शरीराश्रयत्वेन हेतुत्वसिद्धेः । न चात्मैकत्वे सुखदुःखादिसाङ्कर्यप्रसङ्गः । प्रतिबिम्बेषु सत्यप्येकत्वे वर्णसाङ्कर्यादर्शनात् । अन्योन्यवृत्तान्ताननुसन्धानमपि शरीरभेदादेवोपपद्यते । एकस्याप्यात्मनो ऽतीतशरीरादिष्वनुसंधानादर्शनात् । न च जीवानामन्योन्यभेदाभावे ऽपि जीवब्रह्मणोर्भेदः स्यादिति मन्तव्यम् । न तावदत्र प्रत्यक्षं क्रमते । जीवब्रह्मणोरतीन्द्रियत्वात् । नापि विरुद्धधर्माश्रयत्वहेतुना अग्न्युदकादिवदिति चेद् न । जननादीनां शरीराश्रये हेत्वसिद्धेः । नापि नियन्तृनियन्तव्यादि श्रौतलिङ्गं भेदे मानम् । नान्योतोस्ति द्रष्टा नान्योतोस्ति श्रोतेत्यादिश्रुतिभिस्तस्य बाधात् । नापि द्वा सुपर्णेति श्रुत्या भेदसिद्धिः । स यश्चायं पुरुषे यश्चासावादित्ये स एक इत्याद्येकत्वप्रतिपादकश्रुतिविरोधात् । भ्रान्तिसिद्धद्वैतानुवादेनापि द्वित्वश्रुत्युपपत्तेः । तस्मान्न भेदाभेदौ विना ऽद्वैतदर्शनेन द्वैतदर्शनस्य बाधः सिद्धः । ततश्च ब्रह्मसाक्षात्कारमात्रेण फलसिद्धेर्न वेदान्तेषु विधिगन्धोऽपि शङ्कनीयः । यदि स्यात्तर्ह्येकैव षोडशलक्षणी धर्ममीमांसा प्रसज्येत । तथा चाथातो ब्रह्मजिज्ञासेति पृथगारम्भो नोपपद्येत । शरीरेन्द्रियसाध्या विधिभेदाः पूर्वमीमांसायां निरूपिताः । इह तु मानससाध्यो विधिर्निरूपित इति पृथगारम्भ इति चेत् तर्ह्यथातः परिशिष्टधर्मजिज्ञासेत्येवारभ्येत न त्वेवमारभ्यते । तस्माद्धर्मब्रह्मभेदादेवानयोर्मीमांसयोर्भेदः । तदेवं विधिशङ्काया अप्यभावान्निर्विघ्नो ब्रह्मणि वेदान्तसमन्वय इत्यशेषमतिमङ्गलम् ॥

संगृहीतं विवरणं सहानेकैर्निबन्धनैः ।
टीकाऽऽयासं विना लोकाः क्रीडन्त्वत्र यथासुखम् ॥

महतां हृदयं बोद्धुमशक्तो ऽप्यतिभक्तितः ।
अकार्षं ग्रन्थमेतेन प्रकाशात्मा प्रसीदतु ॥

यद्विद्यातीर्थगुरवे शुश्रूषा ऽन्या न रोचते तस्मात् ।
अस्त्वेषा भक्तियुता श्रीविद्यातीर्थपादयोः सेवा ॥

इति श्रीविवरणप्रमेयसंग्रहे चतुर्थसूत्रे द्वितीयवर्णकं समाप्तं * समाप्तं च चतुर्थसूत्रम् ॥

## समाप्तश्च विवरणप्रमेयसङ्ग्रहः ॥

## शुभं भवतु ॥

---

* आदितः प्रभृति ६ वर्णकान्यत्र पूर्णानि ।